


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम् .

संपुटः ९ | 15 OCTOBER 1971 | क्रमांकः १०

विरोधिकृत् आश्वयुजांकः

मूल्यम् ४० पैसाः

# विषयसूचिका




# अल्ला !

अल्ला अल्ला अहो ते विलसितम !
हल्लोचनयोरतीतं खलु तत्स्थितम ॥

व्याघ्री शिशून् खादति व्याळयण्डान् स्वानेव गिलति
महामत्स्योऽल्पान् तानत्ति कुञ्जरी कुञ्जरान् बन्धयति ।
पक्ष्येव पक्षिणः पातयति परितः प्रसृते पापिष्ठे जाले
मानव एव दानवो भूत्वा मारयति मनुजान्निजान् ॥ अल्ला ॥

नखशूलेटः कामयोनिष्ठाः कामाग्रेसराः सुशीलेष्टाः
द्र. मु. काः जनसंघीयाः मुसलमेयाः प्रभूताः ।
स्वतन्त्रा अस्वतन्त्रा वा दुस्तन्त्राः परिभ्रान्ताः
परस्परं वञ्चयन्ति सोदरास्सुदूरं महोग्रा भृशम् ॥ ॥ अल्ला ॥

पाकस्थानं घूकलोकस्थानं समकल्प्यत नितराम्
मदान्धैर्धीमन्दैः नररक्षोवृन्दैः पाकेन्द्रैः ।
स्वीया एव बान्धवा प्रधाव्यन्ते खण्डयन्ते दह्यन्ते
नागरकलोकाश्च वीक्षन्ते इदं सानन्दं निभृतम् ॥ ॥ अल्ला ॥

# सम्पादकीयम्

## प्रजाप्रभुत्वम् - निजप्रभुत्वम्



प्रजाप्रभुत्वं दूरतो रम्यं प्रतिभाति सिद्धान्ततश्च सौम्यम्। आचरणे चानेकसंकटान्युद्भवन्ति तस्मिन्। तादृशस्थितेः अस्मद्भारतमल मुदाहरणार्थम्। न प्रजा राजनीतिज्ञाः न वा परहितज्ञाः। कतिपयधूर्तवचनानां वारं वारं श्रवणेन कलुषितविचलचित्ताः गड्डरिकाप्रवाहपतिताः स्वरे स्वरं करे करं मेलयन्ति। प्रत्यक्षमस्माकं निर्वाचनवेलासु निर्विविक्षूणां उपन्यासाः निर्वाचकानां वीरावेशाः धनार्जकानां विचित्रचेष्टाः विजयप्रकाशनानन्तरं च सन्निपातनिवर्तनकालीनदुर्बलता चेति। इदं च भृशमनुभूयते विजेतारो वा स्वपदव्युद्गमनप्रयासशीलाः स्वनियोजकान् स्ववाग्दानानि स्वकर्तव्यानि च सुतरां विस्मरन्तीति। पदवीव्यामोहपरवशा दुराशापराः स्वपक्षं स्वसिद्धान्तं च निर्धूमं ध्यात्वा स्वविरुद्धपक्षे प्रविशन्ति, तत्रापि लाभाभावे अवगते पक्षान्तरम्। एवं च वंचनाचतुरैः नायकपदधारिभिः प्रतारकैः वयं प्रभुम्मन्याः सरलहृदयाः जना एव वराकाः विभ्रष्टाः। दुर्भिक्षनिवारणव्याजेन ऋणदानच्छलेन सेत्वादिनिर्माणकपटेन च पीठस्थाः तच्छायाश्रया वा पोष्यन्ते लक्षशो धनैः, न कोपि दुर्गतः।

अधुना चान्या विलक्षणा परिस्थितिः प्रादुर्भवति यत्प्रजाप्रातिनिध्यबले पूर्णेपि वर्तमाने नायकः नायकान्तरैः स्वपदादपनीयत इति। इदं च चोराश्च चोराश्च ग्रामान् (स्वलुण्ठनीयान्) परस्परं

व्यभजन्तेति आन्ध्रन्यायं स्मारयति । यः सकलगुणमहितः प्रजाहितकरः अद्वेष्टा अलोभोऽतिगभीरः कार्यदक्षो नायकः, यस्य च प्रजाप्रतिनिधीनां पूर्णस्सहकारो वर्तते, यं च वैधप्रसंगेन चालयितुमशक्यं, तादृशश्च महानायकः "दक्षिणावर्तशाखोयं हन्त भस्मीकृतो मया" इतिवत् सनिर्बन्धं विनिपात्यते आत्मलाभमात्राशया। न जाने आत्मलाभो भवेन्न भवेद्वा, उत्तमं तु वस्तु प्रध्वस्तं भवति स्वहस्तेनैव ।

एषा दशाऽद्य आन्ध्रप्रदेशे कल्पितास्मत्प्रधानामात्यया यद् ब्रह्मानन्दरेड्डिर्निर्बन्धेन अपवाहितः । स्फुटमुच्यते अनेनैव आन्ध्रदेशस्य अखंडता ध्वंस्यते, विना तेन तु संरक्ष्यत इति । परन्तु नैतद्विश्वास्यं व्यक्तिस्सिद्धं पृथक्त्वं वा अखंडत्वं वा नित्यमिति । एतत्पूर्वपालकानामेव सरणिरनुसृताऽनेन अपि च तल्लोपाश्च बहुलं निरस्ताश्च । तथापि व्यक्तिद्वेषपरैः परैः हठमात्रसारैः अतिपीडिता प्रधानामात्या निकटागामिनिर्वाचनलाभमात्रमाकांक्षमाणा एवमकरोदिति महद्दौर्भाग्यम् । एवमाचारे प्रवृत्ते कतिचन व्यक्तयश्च संघटिताः तदा तदा किं वाऽकार्यं नाचारयिष्यन्ति ?

इदं तु स्तुत्यं यद्ब्रह्मानन्दरेड्डिः स्वपदत्यागेन सहैव तेल्लंगाणीयं श्री पि. वि. नरसिंहराव् महोदयं नायकत्वे न्ययोजयदिति । स च महामतिः आन्ध्रप्रान्तवर्तिनमप्येकं उपप्रधानं करिष्यतीति समुचितं प्रान्तद्वयभेदनिराकरणायोपयुज्येतेति । अथापि अत्र तेल्लंगाणासमितेः सहकारः कियान् वा भविष्यतीति कालगत्यैव विज्ञेयं यतः तत्र केचित् अधुनैव पृथक् तेल्लंगाणवादस्य तादवस्थ्यमेव घोषयन्ति ।

# सम्पादकीयम्

## प्रजाप्रभुत्वम् - निजप्रभुत्वम्



प्रजाप्रभुत्वं दूरतो रम्यं प्रतिभाति सिद्धान्ततश्च सौम्यम् । आचरणे चानेकसंकटान्युद्भवन्ति तस्मिन् । तादृशस्थितेः अस्मद्भारतमल मुदाहरणार्थम् । न प्रजा राजनीतिज्ञाः न वा परहितज्ञाः । कतिपयधूर्तवचनानां वारं वारं श्रवणेन कलुषितविचलचित्ताः गड्डरिकाप्रवाहपतिताः स्वरे स्वरं करे करं मेलयन्ति । प्रत्यक्षमस्माकं निर्वाचनवेलासु निर्विविक्षूणां उपन्यासाः निर्वाचकानां वीरावेशाः धनार्जकानां विचित्रचेष्टाः विजयप्रकाशनानन्तरं च सन्निपातनिवर्तनकालीनदुर्बलता चेति । इदं च भृशमनुभूयते विजेतारो वा स्वपदव्युद्गमनप्रयासशीलाः स्वनियोजकान् स्ववाग्दानानि स्वकर्तव्यानि च सुतरां विस्मरन्तीति । पदवीव्यामोहपरवशा दुराशापराः स्वपक्षं स्वसिद्धान्तं च निर्धूमं ध्यात्वा स्वविरुद्धपक्षे प्रविशन्ति, तत्रापि लाभाभावे अवगते पक्षान्तरम् । एवं च वंचनाचतुरैः नायकपदधारिभिः प्रतारकैः वयं प्रभुम्मन्याः सरलहृदयाः जना एव वराकाः विभ्रष्टाः । दुर्भिक्षनिवारणव्याजेन ऋणदानच्छलेन सेत्वादिनिर्माणकपटेन च पीठस्थाः तच्छायाश्रया वा पोष्यन्ते लक्षशो धनैः, न कोपि दुर्गतः ।

अधुना चान्या विलक्षणा परिस्थितिः प्रादुर्भवति यत्प्रजाप्रातिनिध्यबले पूर्णेपि वर्तमाने नायकः नायकान्तरैः स्वपदादपनीयत इति । इदं च चोराश्च चोराश्च ग्रामान् (स्वलुण्ठनीयान्) परस्परं

व्यभजन्तेति आन्ध्रन्यायं स्मारयति । यः सकलगुणमहितः प्रजाहितकरः अद्वेष्टा अलोभोऽतिगभीरः कार्यदक्षो नायकः, यस्य च प्रजाप्रतिनिधीनां पूर्णस्सहकारो वर्तते, यं च वैधप्रसंगेन चालयितुमशक्यं, तादृशश्च महानायकः "दक्षिणावर्तशाखोयं हन्त भस्मीकृतो मया" इतिवत् सनिर्बन्धं विनिपात्यते आत्मलाभमात्राशया। न जाने आत्मलाभो भवेन्न भवेद्वा, उत्तमं तु वस्तु प्रध्वस्तं भवति स्वहस्तेनैव ।

एषा दशाऽद्य आन्ध्रप्रदेशे कल्पितास्मत्प्रधानामात्यया यद् ब्रह्मानन्दरेड्डिर्निर्बन्धेन अपवाहितः । स्फुटमुच्यते अनेनैव आन्ध्रदेशस्य अखंडता ध्वंस्यते, विना तेन तु संरक्ष्यत इति । परन्तु नैतद्विश्वास्यं व्यक्तिस्सिद्धं पृथक्त्वं वा अखंडत्वं वा नित्यमिति । एतत्पूर्वपालकानामेव सरणिरनुसृताऽनेन अपि च तल्लोपाश्च बहुलं निरस्ताश्च । तथापि व्यक्तिद्वेषपरैः परैः हठमात्रसारैः अतिपीडिता प्रधानामात्या निकटागामिनिर्वाचनलाभमात्रमाकांक्षमाणा एवमकरोदिति महद्दौर्भाग्यम् । एवमाचारे प्रवृत्ते कतिचन व्यक्तयश्च संघटिताः तदा तदा किं वाऽकार्यं नाचारयिष्यन्ति ?

इदं तु स्तुत्यं यद्ब्रह्मानन्दरेड्डिः स्वपदत्यागेन सहैव तेल्लंगाणीयं श्री पि. वि. नरसिंहराव् महोदयं नायकत्वे न्ययोजयदिति । स च महामतिः आन्ध्रप्रान्तवर्तिनमप्येकं उपप्रधानं करिष्यतीति समुचितं प्रान्तद्वयभेदनिराकरणायोपयुज्येतेति । अथापि अत्र तेल्लंगाणासमितेः सहकारः कियान् वा भविष्यतीति कालगत्यैव विज्ञेयं यतः तत्र केचित् अधुनैव पृथक् तेल्लंगाणवादस्य तादवस्थ्यमेव घोषयन्ति ।



सुलभपाठमाला — ५८

# लता: – पटोलिका

पटीली लता कायमानोपरि प्रसार्यते । तत्पत्रं च हस्ततल-विस्तृतं कोशातकीपत्रवत् प्रान्तशिखरं किंचिद्धवलवर्णं च वर्तते । एषा च लता नातिदीर्घा नातिह्रस्वा सुदीर्घशलाटुजालं प्रसूते । शलाटवश्च स्निग्धाः सर्पाकाराः दीर्घाः धवलाः धूम्राः राजिमन्तो वा अन्तस्सुषिरा भवेयुः । एतद्बीजं च कारवेल्लबीजकल्पं धवलं वर्तते । अयं च शलाटुः पथ्यकरः ज्वरहरः प्रथते ।

सर्पदंशनिवारकमन्त्रोपासकाः च प्रायः पटोलशलाटुं नैव भक्षयन्ति यतस्स सर्पवत् प्रतिभासते दर्शने ।

एतच्छलाटुनाऽऽहारव्यजनं चणकाढकबीजदलसंयोजनेन केवलं वा अद्रवं साम्लद्रवं कूटं साधयन्ति गृहिण्यः ।

अन्या काचन तिक्तपटीली वैद्यके प्रथते या काण्डपत्रसारा ज्वहररचूर्णकषायेषु उपयुज्यते ।



# पदार्थविज्ञानसारः

(पूर्वानुबन्धः)

शिष्यः– मर्कटकात् किमपि फलमस्ति ?

गुरुः– यद्वयं तानवजानीमस्तत् कारणमिदं, ते च निजशत्रून्विनाशयितुं स्वीयमुखाद्विषमुद्गिरन्ति। किंतु ममैतादृग्बोधो भवति, तेषामुद्गीर्णविषं केवलं मक्षिकादीन्विनाशयति, परन्त्वस्माकं कामपि हानिं विधातुं न शक्नोति। यद्यपि मर्कटकोस्माभिरग्राह्योऽस्पृश्यश्च भवति, तथापि तस्मादस्माकं प्रयोजनमस्ति, यतस्ते मक्षिकाजातं गृहीत्वा भक्षयन्ति। एवं वृक्षाणां शाखासु यत्ते जालं तन्वन्ति, तेन च वृक्षाणां कतिचित् फलानि रक्षितानि भवन्ति। एवं ते यस्मिन् गृहे तिष्ठन्ति, तत्रानुमीयते तेन किंचित् फलमस्तीति बोधोयं भवति च। येन वायुनास्माकं हानिर्भवितुमर्हति तस्य दुष्टगुणं ते भक्षयन्ति। पश्य, यच्च जालं तैर्निर्मीयते तदतीवाश्चर्यरूपं। परन्तूद्यानाभ्यन्तरे विशेषेणाश्चर्यरूपं निर्मितं भवति।

शिष्यः– ग्रीष्मकाले मयैतद्दृष्टं। यच्च मर्कटकोयमेकस्माद्वृक्षादपरवृक्षे तथैकस्माद्गृहादपरगृहे निजसूत्रं योजयति तत् केन रूपेण कर्तुमर्हति ?

गुरुः– कैश्चिदेवं बुध्यते तथा कर्तुं मर्कटकोयमुड्डयितुमर्हतीति। परन्तु कतिचिल्लोका मन्यन्ते तैरेवं रूपेण निष्पाद्यते यथा च प्रथममेकस्य तरोः शाखाग्रे किंचैकस्य गृहस्य प्रान्तदेशे निजसूत्रं बध्नाति। तदनन्तरं मुखतोन्यत् सूत्रं निस्सारयति तत्सूत्रं

तत्र लम्बायमानं दोधूयते। यदा तस्या दिशो वायुर्वहति तदा तत्सूत्रमुड्डीयमानमपरवृक्षे, किं वान्यस्मिन्गृहे श्लिष्टनिर्यासवद्वस्तुवशाद्बद्धं भवति। अनन्तरमूर्णनाभिस्तत्र स्थित्वा तत्सूत्रमाकर्षति। यदि बद्धं जानाति तर्हि सेतुवत् तदुपरिभागेनेच्छावशात् गतागतं करोति। कस्मिन् समये विना समीरणेनैकस्माद्वृक्षादन्यस्मिन्वृक्षे सूत्रयोगो दृश्यते। तस्मादेव कारणात्कैश्चिदनुमीयते प्रथममेकस्य तरोरग्रभागे निजजाले मर्कटकः स्वकीयसूत्रं बद्ध्वा तरोर्मूलदेशात् सूत्रयोगेनाधः पतति। तदन्ते वृक्षान्तरशाखाग्रं समारुह्य तत्सूत्रं बद्ध्वा समाकर्षणेन समानं करोति।

शिष्यः– मर्कटका बहुविधाः सन्ति न ?

गुरुः– मर्कटकजातौ त्रिंशदधिकशतविधास्सन्ति, ते च सर्वस्मिन् देशे दृश्यन्ते।

शिष्यः– केन रूपेण तत्सर्वं विशेषेण ज्ञायते ?

गुरुः– तेषां नयनानां स्थलविशेषेण विशेषो ज्ञायते।

शिष्यः– मर्कटकानां कति नयनानि सन्ति ?

गुरुः– तेषां प्रायः सर्वदा नयनान्यष्टौ सन्ति। एवं केषांचित् मर्कटकप्रभेदानां शरीरे चतुष्पार्श्वीयचतुष्कोणे नयनान्यष्टौ सन्ति। केषांचित् मर्कटकानां सम्मुखभागे अर्धचन्द्राकारेण त्रीणि त्रीणि नेत्राणि सन्ति। केषांचिद्वा सम्मुखभागे सरळे रेखाद्वये चत्वारि चत्वारि कृत्वा नयनान्यष्टौ विद्यन्ते।

शिष्यः– एते मर्कटकाः किं भक्षयन्ति ?

गुरुः– यान्कीटान् ते चाक्रम्य धारयन्ति, परस्परं वा यान् ये पराजयन्ते तान् ते भक्षयन्ति। वर्षे वर्षे च सर्पवत् ते कञ्चुकं

मुंचन्ति । तत्प्रकारो यथा, ते च किमप्यवलम्ब्य निभृतदेशे डोलायमानाः कञ्चुकान्निर्गच्छन्ति । परन्त्वेतादृगभ्ररोपि मर्कटकगणोऽपरैः कीटैर्निहत्य भुज्यते । पश्य न हीदृशः कोपि कीटोस्ति, यश्चान्यैः कीटैस्ताडितो विनाशितो भक्षितश्च न भवतीति ।

## अथ दशमकथोपकथनं कृमिविषयकम्



गुरुः– अवशिष्टजन्तोरर्थात् कृमेर्विषयमिदानीम् वयं विवेचयामः ।

शिष्यः– कृमिजातेः कति वर्गास्सन्ति ?

गुरुः– तेषां पञ्चैव वर्गास्सन्ति । प्रथमवर्गस्तु येषां शरीरं रज्जुवत्, यथा महीलतागर्भकृमिप्रभृतयः । द्वितीयवर्गस्तु येषां शरीरमनावृतं विशेषावयवयुक्तं च, यथा शंबूकादयः । तृतीयवर्गस्तु येषां शरीरं सुकोमलं शङ्खेनावृतं च । कृमिदेहसमुत्पन्नशङ्खेन तृतीयवर्गस्तु विभक्तो भवति । शङ्खास्तु त्रिविधाः । आद्यं च येषा मेकखण्डोऽवयवः, यथा वराटकादयः । द्वितीयं च येषामवयवः खण्डद्वयेन मिळितः, यथा शुक्तिप्रभृतयः । तृतीयं च येषामवयवो नानाखण्डेन मिळितः। तृतीयप्रकारस्तु बहुविधो नास्ति, येषु त्रिविधशङ्खेषु नानागणा नानाप्रकाराश्च विद्यंते । अस्मिन्विषये यद्विशिष्टज्ञानं तदेव शङ्खविद्याभिधीयते । चतुर्थकृमिवर्गस्तु ये चाऽप्राणिवद्दृश्यन्ते, यथा प्रवाळादयः । पञ्चमवर्गश्च प्रथमवर्गद्वितीयवर्गाभ्यां केवलमाकारगतक्षुद्रतया विशेष्यन्ते । ते चाविलजलेषु हठात् जायन्ते । केन जायन्ते तद्वक्तुमशक्यमस्माभिरिति ।

शिष्यः– हे महाशय, मम बोधो भवति तर्हि सर्वेषु वस्तुषु प्राणास्सन्तीति ।

गुरुः– एतत्कृमिजातितोपि क्षुद्रतरोऽपरो जन्तुरस्ति, तत्र सन्देहो-नास्ति । परं त्वेवं रूपेण ते तिष्ठन्ति, कैश्चिदपि नयनेन दूरदर्शनयन्त्रेण वा लक्षयितुं नो शक्यन्ते ।

शिष्यः– एतेषां प्रागुक्तकृमिवर्गाणां मध्ये येषां पृष्ठदेशे शङ्खोस्ति, तेषां विषयं बहुधा विवेचितवा नहं । एवं तत्र महान् ममाश्चर्यबोधो भवति, ते च केन रूपेण स्वस्वगृहं विदधतीति, तथैव स्वेन सार्धं कथंरूपेण वा तन्नीत्वा गच्छन्ति ?

गुरु.– एतदतीवाश्चर्यमिति सत्यं, यदात्मनां तद्रूपङ्गृहं स्वेन स्वेन सार्धं नीत्वा ते भ्रमन्ति । त्वं हि विवेकत्रचा बुद्धचा यत्तदप-श्यस्तस्मिन्नहं नाश्चर्यं मन्ये । सर्वेषां जन्तूनां पृथक्त्वेन वास-गृहमस्ति । यश्च शङ्खमध्ये शम्बूकजन्तुरस्ति तस्य काठिन्यं लघुता चेति गुणद्वयमस्ति । परन्त्वेतद्गुणद्वयस्यैकत्रावस्थानं दुर्घटं । किञ्च शङ्खस्येदृग्गुणो यदि नासीत् तर्ह्येष कृमिगणो न हि जीवितुं समशकत्, तथा स्थानात् स्थानं च गन्तुं नशक्नोति । शीतसमये समागते कस्मिंश्चिद्गर्ते ते प्रवि-शन्ति । एवं तस्मिन् स्थाने तेषां शरीरतो निर्यासवत् क्लेदो निस्सरति । तेन च शङ्खानां मुखावृतिर्जायते । अनेन प्रकारेण शीतसमये सुखेन ते कालं गमयन्ति । किंतु ग्रीष्मकाले समागते तामेवां मुखावृतिं शिथिलीकृत्य सर्वतो भ्रमन्ति ।



(सशेषम्)

# भाषाकुमारीणां विवादपरिहारः

ले० पं· पडाल ब्रह्मरेड्डि; कोक्कुदुरु·

(पूर्वानुबन्धः)

(आंग्लभ षाकुमार्याः प्रवेशः)

आंग्लभाषाकुमारी– (सक्रोधम्) किमहं भारतदेशादपसर्तव्या ? या भाषा समस्तभारतीयभाषाणां पोषिका संवर्धिकाऽऽसीत्, भवति च, तस्या अपसारणं नाम भारतस्यावनतिकरणत्वात् स्वयंकृतापराध एव भवेत्, कृतघ्नतासंसूचिका च भवेत् । इदानीं भारते ये ये वैज्ञानिका विद्वांसः, मेधाविनः, उद्योगपतयः सन्ति, ते ते आंग्लभाषाज्ञातारः सन्तीति कृत्वेदं सुस्पष्टं प्रतीयते यद् आंग्लभषापठने कीदृग् माहात्म्यं वर्तत इति ।

आर्यभषाकुमारी– (सहासं सावज्ञं च) किमांग्लभाषापठनमात्रेणैव मानवाः बुद्धिमन्तः भवेयुः? त्वयि महत्ता ईदृशी वर्तते चेत्तर्हि कथमांग्लेयाः सभ्याः भवितुं फ्रेञ्चभाषाया अध्ययनं नूनं कुर्वन्ति स्म ? महात्मा गान्धीजीः स्वीये चरित्रे किमुल्लिखितवान् ? स खलु यदा बैरिस्टरीमुत्तर्तुं लण्डननगरमगच्छत्, तदा तत्र फ्रेञ्चभाषापरिज्ञानं सभ्यत्वप्रतीकं मन्वते इति फ्रेञ्चभाषायाः पठने संलग्न आसीत् किल । आंग्लभाषापेक्षया फ्रेञ्चभाषा महत्वयुक्ता सभ्यताप्रतीका च चेत्तदा आंग्लशासकाः किमिति भारते तां राजकीयभाषापदे नारोपितवन्तः ? किमनेन तेषां प्रवञ्चना न स्फुटीभवति ? यद्यपि अन्ताराष्ट्रीयभाषासु तवापि अस्तित्वं

विद्यते, तथापि त्वमेव सर्वस्वमिति न स्वीक्रियसे खलु बहुभिर्देशैः । अपि तु देशेष्वनेकेषु तवापेक्षया इदानीं रष्यन्, जर्मन्, फ्रेञ्चाद्यन्ताराष्ट्रीयभाषाणामध्ययनमधिकतया क्रियते खलु ।

आन्ध्रभाषाकुमारी – लार्ड् मेकाले महोदयस्येयं योजनाऽऽसीत् यद्यदि भारते आंग्लभाषा शासकीयभाषा क्रियते तदाऽस्माकं भारतीयभाषाणां पठने व्यर्थः प्रयासो न भवेत्, शासककार्यार्थञ्च सेवकाः सुलभतया प्राप्नुयुरपि तु सर्वे शिक्षिता भारतीया आंग्लभाषाप्रेमिणः, भारतीयसंस्कृत्युपेक्षकाश्च भवेयुः, यतः ते आंग्लेयानां पक्षपातिनः समर्थकाः च भविष्यन्तीति नाऽत्र सन्देहलेश इति । अद्य भारतदेशः स्तवन्त्रोऽस्ति । स्वतन्त्रे भारते काचन भारतीयभाषा एव शासकीया, राष्ट्रभाषा च भवितुमर्हति, न हि परकीया विदेशीया वाणी ।

आंग्ल – किं भारतीयभाषासु काचिद्वाणी एतादृशी वर्तते, या खलु आंग्लभाषायाः स्थानमाप्तुं योग्या? भारतीयभाषासु सम्यग् गद्यस्य विकासोऽपि नाऽऽसीत् । नैव साहित्यञ्च पर्याप्तमात्रयोपलभ्यते । ईदृशीभिरल्पविकसिताभिरर्धविकासिताभिश्च भारतीयभाषाभिः शासनकार्याणि चलिष्यन्तीति महद्विचित्रम् । मया 'अल्पार्धविकसित'मिति यदुक्तं, तदप्यांग्लभाषासम्पर्कप्रभावत एव ।

आन्ध्र – किं तव सम्पर्कप्रभावतः भारतीयभाषासु गद्यस्य साहित्यस्य च विकासः अभवदिति मन्यसे? उदाहरणार्थन्तु मम गद्यरचनामार्गदर्शकः चिन्नय्यसूरिः प्रवर्तकश्च वीरेशलिङ्गमहोदयः । किं तौ आंग्लेयौ? उत आंग्लभाषासम्पर्केण

प्रभावितौ? तौ खलु संस्कृतगद्यस्य आन्ध्रभाषागद्ये अनुकरणं कृतवन्तौ न हि आंग्लगद्यस्य। त्वया न ज्ञायते किं यदस्माकं संस्कृतभाषायां तदा - सार्धसहस्रवर्षपूर्वमेव गद्यस्योन्नतिः विकासश्चासीत्, यदा हि, मन्ये, तव नामापि, अस्तित्वमपि नात्रैव, तव देशोऽपि नासीत्। नाहं जाने, यत्तदा त्वदीया जननी लैटिनभाषा स्वल्परचनगद्ययुक्ता आसीन्न वेति। संस्कृतसाहित्यस्य दशमांशमात्रमपि साहित्यं त्वयि आसीत्किं एकोनविंशत्तमशताब्दीपर्यन्तम्?

आंग्ल– (लज्जया मुखमधः कृत्वा) किं पुरा संस्कृतभाषायामपि सरलं व्यवहारयोग्यञ्च गद्यसाहित्यं अवर्तत? किञ्च जीवन्तीनां भाषाणां प्राणभूता अकारादिक्रमयुक्ताः कोशग्रन्था विराजन्ते स्म?

आर्य– ब्राह्मणग्रन्थेषु यद् गद्यसाहित्यमुपलभ्यते, तत् सरलं व्यवहारयोग्यञ्च नास्ति किम्? महाकवेर्दण्डिनो दशकुमारचरिते यद् गद्यमुपलभ्यते, तत्खलु सरलं व्यावहारिकग्रान्थिकगद्यस्योदाहरणीभूतञ्च। संस्कृतादिभारतीयभाषासु यद्यप्यकारादिवर्णक्रमसहिताः कोशग्रन्थाः नासन्निति तासां महत्वमल्पं भवेत्किम्? तासु भाषासु तु पद्यरूपेण केशग्रन्था विराजन्ते, येषां कण्ठस्थीकरणेनाल्पप्रयासेनैव विपुलपर्यायशब्दपरिज्ञानं भवतीति कृत्वा वर्णक्रमकोशग्रन्थानामावश्यकतैव नानुभूयताऽस्माभिः। ककाराद्यन्तपदकोशाः एकाक्षरद्वयक्षरादिक्रमकोशश्च सन्त्येव।

तमिल– इयत्तैव नास्ति शास्त्रस्य, विज्ञानस्य च। समस्तग्रन्थराशयः पद्ये निबद्धा आसन्। तेषां वाचोविधेयत्वं किन्नत्सुक-

रमिति प्रेक्षावतां अतिरोहितमेव। त्वयि तु सरलतेयं नास्ति।

आंग्ल– इदानीं सर्वाङ्गीणविकसिताया मम निष्कासनं कुतः?

आर्य– यद्यपि तव पठने भारतीयानामनेकानि संवत्सराणि व्यर्थं व्यतीतानि भवन्ति, तथापि तवोपरि यथेष्टमधिकारो नोपलभ्यते। भाषापठने एव समयाधिक्यं भवेच्चेत्तदा स्वेप्सितविषयान्, विज्ञानादिकं वा कथं साधयितुं छात्रः प्रभवेत्? परकीयभाषामाध्यमेन पठिता विषयाः सुचारुरूपेण हृदयङ्गमीभवन्ति। अधुना वयं यद्यपि स्वतन्त्राः, तथापि अस्माकं आत्मा, शरीरं समस्तमपि परकीयं परतन्त्रमेवास्ति। तत्र मुख्यकारणं किमित्युक्ते भाषापारतन्त्र्यमेव, त्वादृग्वैदेशिकभाषायाः भारते शासकीयभाषतया स्थापनमेव।

आंग्ल– तत्कथमिव?

आन्ध्र– त्वत्साहित्यपठनेन सर्वे भारतीयाः आत्मनः उत्कृष्टां संस्कृतिं विस्मारितवन्तः। प्राश्चात्यसंस्कृतिमोहाब्धौ पतित्वा भारतीयधर्मो नाम कः स्वर्गः मोक्षो नाम को वा इति ज्ञातुमप्यशक्नुवन्तः ऐहिकभोग एव समस्तमिति मन्वानाः दयादानादिपुण्यकर्मविहीनाः भवन्ति।

(सरोषम्)



# मण्डूकतुला

मण्डूकानां तोलने मतिरुदभून्महाराजस्य
महाह्रदे प्रासारयन् जलं महामात्याः महामत्या ॥

अकर्षन् आकर्षन् समाकर्षन् भेकजालं
जलाज्जाले समलगन् बाला युवानो वृद्धाः ।
स्त्रियः पुमांसो बहुलाः स्थूलाः स्थूलतराः स्थूलतमाः
बेक बेका भेंक भेंक भेका मूका मूत्रं व्यसृजन् ॥

  

किं नः छिन्नं वज्रं भस्मीक्रियेत भेकमूत्रेण
अस्माकं भारगणना भेकानां आवश्यकी समेषाम् ।
क्षिपत तुलाद्रोण्यां उद्धरत तुलामूष्टिं ऊर्ध्वम्
लिखतैकैकमानस्य गणनां यथा संकलनोपयुक्तम् ॥

अहो उत्पतन्ति भेकाः पृष्ठतः पङ्क्त्यां प्रबलं
केचित्पतन्ति मानधनोपरि केचित्प्रमातुरुत्तमाङ्गे ।
गृहाण गृहाण निगृह्णीष्व निर्दयं दर्दुरान्
पलायन्ते परितोऽस्माननापृच्छ्यैव धीरम् दूरम् ॥

कथं वैतेषां तोलनं सिद्ध्येत अव्यवस्थितानां
क्षणमस्मिन् पात्रे तिष्ठन्ति क्षणान्तरे च तस्मिन् ।
तुला च विषमीक्रियते एतैर्वराकैः भेकलोकैः
वस्तुतोऽस्तव्यस्तीक्रियतेऽस्माकं मतिरेव वा नूनम् ॥

  

कुरुत शासनं धरत वा दण्डं पात्रपरिवर्तने
अवैधं कर्मेति आघुष्यतां सनिर्घोषम् ।
अन्यथा तुलापात्रं शून्यमवतिष्टेत नियतम्
असमर्थाश्च भवेम राजाज्ञानिर्वर्तने नितराम् ॥

  

अरे मूढ ! किं शासनैः ग्रन्थभूषणैर्भाषणै र्वा
दण्डैर्वा खण्डनमुण्डनमण्डितैः उपमितडिंडीरैः ।
रक्षतामिषं तोषां भृशं मानपात्रेषु
स्वेच्छयाऽऽयास्यन्ति भेकाः उपवेक्ष्यन्ति च यावद्ग्रासम् ॥

  

भेकाः पर्यहसन् भेष् भेषित्यभाषन्त
अहो किं वयं प्रजाप्रतिनिधयः ? स्वपरपक्षविध्वंसकाः ?
वयं स्वेच्छाचारिणो वयं स्वच्छाचारिणः
न वयमुपमीयेमहि कदापि कलुषितवर्तनैः धूर्तैः ॥



# अपसारिताग्निभूतलन्यायः

"अबरः"

अपसारितः अग्निः यस्मात् तदपसारिताग्नि; तादृशं भूतलं यथा तथा इति न्यायसमन्वयः ।

सत्यग्नौ भूतलमत्युष्णं भवति । अपसारितेऽपि अग्नौ भूतलस्य उष्णता नापयति अग्निना सह । अग्नेः अपसरणानन्तरमपि तज्जन्यं उष्णत्वं यथा अनुवर्तमानमेव अनुभूयते भूतले तथा कस्यचिदपसरणेऽपि तत्फलितस्य अनुवृत्तिः तत्प्रदेशे अनुभूयते चेत्तर्हि तत्र अस्य न्यायस्य अनुप्रवेशो भवितुमर्हति ।

उदाहरणार्थं भारते आंग्लेयानां अपसरणेऽपि तदीया आंग्लभाषा अद्यावधि अनुवर्तमानैव दरीदृश्यते । भारतं अपगतांग्लेयसत्ताकमपि अपसारिताग्निभूतलवत् आंग्लभाषादाहान्न विमुक्तमस्ति । अतः भारते आंग्लानुवृत्तिः अपसारिताग्निभूतलन्नायेन समर्थ्यते ।

एवमेव हिंगु-ग्रन्थि-युक्तं वस्त्रं (इंगुवकट्टिनगुड्डु-तेलुगु) हिंगुव्ययेऽपि तद्वासनावासितमेव अनुभूयते । गोपालः मृतेऽपि वत्से तत्प्रतिमां पुरः स्थापयित्वा गां दोग्धि । गौः वात्सल्यातिशयेन पयस्सिञ्चति । मृतेऽपि वत्से गोः वात्सल्यं नापगतम् । तिन्त्रिणीफलं शुष्कमपि आम्लगुणं न जहाति । (चिंत चच्चिना पुलुपु चावदु-तेलुगु) एवमादीनि बहूनि उदाहरणानि उपलभ्यन्ते ।

एतादृशेषु स्थलेषु सर्वत्रापि पूर्वोक्तस्य न्यायस्य समन्वयं कर्तुं शक्यते ।

# वर्षाः - ऋतुः

लेखकः - श्यामसुन्दरशर्मा, विद्यालङ्कारः, बरबिघा.

## प्रावृड् ऋतुरथ मित्रायातः

अभ्राच्छन्नं गगनमिवैतत्
  कीदृग् भीषण-गहनमिहैतत्
द्योतन्ते विद्युतः समन्तात्
  शिशुरपि नाद्यावधि चायातः ॥ ॥ १ ॥

नद्यो विकरालाः प्रवहन्ति
  भीषणमिह मेढका नदन्ति ।
गर्जन्त्यथ मेघा विकरालं
  निर्गच्छेयुः के शालातः ॥ ॥ २ ॥

मार्गे श्वानोऽपि न सरन्ति
  केऽपि जना न वने विचरन्ति ।
भ्राम्यन्ति भ्रमराः न क्षणेऽस्मिन्
  चलति कोऽपि नाम्नापि न भ्रातः! ॥ ३ ॥

वाहयतीह ग्रामनगरादीन्
  अथ करोति विकलान् मनुजादीन् ।
अस्त-व्यस्तमपि कुर्वन् जगदिह
  ऋतुरयमेकदारुणोत्पातः ॥ ॥ ४ ॥

दिशः समस्तास्तिमिराच्छन्ना
  वाता बान्ति विकृतिमापन्नाः ।
कम्पन्ते हृदयानि समेषां
  मितो दृश्यते करकोद्घातः ॥ ॥ ६ ॥

श्रमिक एक उच्चलितो गन्तुं
  श्रमकरणेन क्षुधं विनिहन्तुम् ।
वृष्टचवरुद्धमना मार्गेऽयं
  ग्रासेऽग्रिमे मक्षिकापातः ॥ ॥ ६ ॥

——:o:——



# अपूर्वं तव हौतात्म्यम्

ले० श्री या. वि. देवासकरः, वरपत्तनम् .

सुधन्योऽसि महामात्य, शास्त्रिन् ! लालबहादुर ।
अपूर्वं तव हौतात्म्यं "ताश्कन्दे" शान्तिपर्वणि ॥

विललाप च भारतं तदा परलोकान्तरिते महाशये ।
नवभारतभूषणोत्तमे, हा ! श्रीलालबहादुरे हि हा ॥

विधिनाऽकरुणेन कारितं भृशदुःखं च जगत् सभारतम् ।
सुकृतार्थहतो महोदयः सहसा नोऽपहृतः प्रणायकः ॥

सुजनो जनबन्धुरग्रणीः स्मृतिपुष्पैः खलु त्वं सुपूज्यसे ।
भुवि वा द्युवि वाऽमराकृतिः सुतरां 'भारतरत्न' राजसे ॥

शास्त्रिवर्य महामात्य, भो, भो, लालबहादुर ।
त्वत्समो मुख्यमन्त्री नो किं भूतः ? किं भविष्यति ?

पौषमासि च हेमन्ते पंचम्यां भौमवासरे ।
पावनीभूतताश्कन्दे शास्त्रिवर्यो दिवं गतः ॥

# करोति भद्राय विधिर्जनानाम्

लेखक: वैद्यः रामस्वरूपशास्त्री, सम्पादकः, बालसंस्कृतम् , बम्बई-८९.



दिवाकरं चापि निशाकरं च तारागणं खं सरसां च भूमिम् ।
प्रभंजनं चापि धनंजयं च करोति भद्राय विधिर्जनानाम् ।।

श्रुतिस्मृती शिक्षणदीक्षणं च रीतीश्च नीतीश्च विधीन् निषेधान् ।
द्रव्याणि सर्वं च पदार्थजातं करोति भद्राय विधिर्जनानाम् ।।

बर्षा वसन्तं शरदं हिमान्तं ग्रीष्मं च शीतं च दिनं च रात्रिम् ।
भूगोलचक्रं निखिलं द्युचक्रं करोति भद्राय विधिर्जनानाम् ।।

लतासु पुष्पाणि वनेषु वृक्षान् फलानि वृक्षेषु रसान् फलेषु ।
रूपाणि पुष्पेषु गुणांश्च गन्धान् करोति भद्राय विधिर्जनानाम् ।।

जातीर्नराणां विविधांश्च जन्तून् सोऽश्वान् गजान् गाः महिषी-
मृगींश्च ।
उष्ट्रांश्च मेषान् छगलान् बृषांश्च करोति भद्राय विधिर्जनानाम्।।

धनानि धान्यानि पटान् गृहाणि पापानि दुःखानि सुखानि चापि ।
ज्ञानानि विद्याश्च कलाश्च सर्वाः करोति भद्राय विधिर्जनानाम् ।।

हरिश्च पुंसां हृदि संप्रविश्य कर्माणि कर्तुं कुरुते व्यवस्थाम् ।
स संस्कृतं चापि सुसंस्कृतिं च करोति भद्राय विधिर्जनानाम् ।।



# स्वतंत्रे भारते आविष्कारकस्य दुर्दैवम्

श्री इकबालकृष्ण भारती नाम्ना केनचित् आविष्कारकेण 'स्टील' निर्माणस्य एका नूतना एव पद्धतिः विकासिता। तया पद्धत्या स्टीलनिर्मितिव्ययः अतीव न्यूनः इति २५० रू. मात्रं प्रतिमेट्रिकटनं भवेत्। तेनैव सह अल्पव्ययेन भूरिविद्युच्छक्तेः तथैव उर्वरकाणां अपि उत्पादनं सुशकं भवेत्।

वर्षद्वयात् प्राक् सः स्वीयपद्धतेः उपयोगेन राष्ट्रे 'स्टील'स्य उत्पादने क्रान्तिः भवतु इति हेतुना राष्ट्रीयस्टीलमंत्रालयं प्रार्थितवान्। ते तद् सर्वं हिंदुस्तान स्टील लिमिटेडं प्रति प्रेषितवन्तः। तत्र पुनः तेषां 'तन्त्रज्ञसमितिः' तस्याः पद्धतेः विषये किमपि निर्णेतुं न अपारयत्। तैः तेषां विदेशीयतंत्रज्ञपरामर्शकाः मेहेन्रीच कॉप्पर्स (जर्मनी) इति संस्थायाः सकाशे सर्वमपि आविष्काररहस्यं उद्घाटितं। तैश्च तस्य लाभप्रदत्वविषये निश्चितं परामर्शं तथा संयन्त्रस्य आकारव्ययादिविषये गणनां दातुं प्रार्थितं।

अपि विदेशीयाः स्वीयाविष्कारान् अस्मद्भ्यः कदापि विना मूल्यं उद्घाटयन्ति ? नैव च। ईदृशाः आविष्कारास्तु स्वीयराष्ट्रस्य आर्थिक-उत्थानहेतुना एव सर्वकारेण पुरस्क्रियन्ते। एतादृशं क्रांतिकारकं आविष्कारं हस्ते लब्ध्वा विदेशीयाः मोक्तुं नाशकन्। तैः श्री भारत्या सह कश्चित् संधिः कृतः।

पुनः कतिचिद्भ्यः मासेभ्यः ऊर्ध्वं तैः हिं. स्टील. लि. भ्यो लिखितं यद् तद् सर्वमपि अतीव लाभप्रदं अस्ति इति। तदा एते तदनुसारेण दुर्गापुरे एकं प्रारंभिकं संयन्त्रं स्थापयितव्यमिति विचारेण प्राग्रूपं आलिखितुं आदिशन्। तदा एव श्री भारती तथा श्री

कॉप्पर्स एतयोः मिथः जातः संधिः। तत्र व्यवधानं अभवत्। संधेः अनुसारेण श्री भारती वा मे. कॉप्पर्स वा एतौ विहाय कश्चिद् अन्यः वा तस्याः पद्धतेः व्यापारिकोत्पादने उपयोगं कर्तुं निषिद्धः इति उद्घाटितं अभवत्। अत्र राष्ट्रे तु 'स्तील'स्य उत्पादनं आवश्यकतातुलनया न्यूनं, तदापि विदेशीयात् महार्घं। एवं सत्यपि विदेशीयसंस्थायाः धूर्ततापूर्णचातुर्येण एषा श्रीभारती-पद्धतिः द्विवर्षपर्यन्तं अनुपयुक्ता एव अतिष्ठत्।

श्री भारती महाशयः सर्वकारं प्रार्थयत् यद् मे. कॉप्पर्स महोदयेभ्य एव अत्र भारते एक कोटिरूप्यकाणां व्ययेन तस्याः पद्धतेः अनुसारेण एकं संयन्त्रं स्थापितुं अनुज्ञा दातव्या इति। परं सर्वकारीयः उद्यमविभागः तन्नाऽमानयत्।

वर्षद्वयान्ते इति जून, २, १९७१ दिने सः संधिः संपुष्टः। पुनरपि श्री भारती महाशयः 'हिंदु. स्टील. लि'भ्यो तस्याः पद्धतेः अत्रैव उपयोगं कर्तुं प्रार्थनां अकरोत्। स्टीलमंत्रालयेन तद्विषये पुनर्विचारं करिष्याम इति आश्वासितं अस्ति।

तस्याः पद्धतेः अनुसारेण संयन्त्रे स्थापिते सति स्टीलस्य विद्युतः तथा उर्वरकाणां भूरिमात्रायां अल्पव्ययेन च उत्पादनं यद्यपि सुशकं तथापि तस्य प्रत्यक्षीकरणे प्रारंभकाले भूरि-पूंजी-(नीवी) विनियोजनं आवश्यकं अस्ति। ५० कोटि व्ययेन स्थापिते संयंत्रे १२ लक्ष टन मितं स्टील उत्पादनं कृत्वा अपि १५० मेगावॉट मित विद्युच्छक्तेः निर्मितिं कर्तुं क्षमां वायु-इन्धन-शक्ति अवकिरेत्। परन्तु स्टील निर्माणक्षमे प्रचलिते संयंत्रे ईदृशी क्षमता नास्त्येव। परंतु तस्याः विद्युच्छक्तेः निर्माणार्थे २८० कोटि रूप्यकाणां अधिकं पूंजी (नीवी) विनियोजनं आवश्यकं अस्ति। न सर्वकारः न तु इतरे

स्वदेशीयाः वणिजः एतावत् विनियोजनं कर्तुं शक्नुवन्ति उत्सहन्ते वा।

यदि राष्ट्रे कोऽपि हि तदर्थे न पुरः सरेत् तर्हि श्री भारती स्वीय–आर्थिकलाभार्थे तं आविष्कारं विदेशीयेभ्यो विक्रेतुं उद्युक्तः भविष्यत्येव। जर्मनी जापान तथा अमेरिकास्थितैः स्टील–उत्पादकैः तस्य आविष्कारस्य एकस्व-अधिकारक्रयणे समुत्सुकता प्रदर्शिता अस्त्येव।

यदि भारतीयेन आविष्कृता एषा स्टील-निर्मितविधा विदेशेषु गच्छेत् तर्हि श्री भारती आविष्कारस्य राष्ट्रभक्तिः आंदोलिता प्रतारिता भवेत्। सः तु केवलं आविष्कारक शुल्क-रूपेण विदेशात् भूरि धनं आर्जयेत् परं। अथ तु विदेशेषु तया पद्धत्या निर्मितं एव स्टील अधिकमूल्येन आयातितव्यं तिष्ठेत्। किं ईदृशी विडम्बना सर्वकारस्य अभिमता?

या जर्मनीदेशीया संस्था तस्य आविष्कारस्य सर्वाण्यपि रहस्यानि ज्ञातवती सा किं स्वस्था तिष्ठेत्? तस्याः व्यवस्थापकाः स्वीय तंत्रज्ञेभ्यः सर्वं ज्ञापयित्वा तदनुसारेण अधिकं चिन्तनं प्रयोगान् कृत्वा अधिकां लाभप्रदां विधां विकासयितुं आज्ञापयिष्यंत्येव। अत्र सर्वकारः यावत् अस्याः विकासे उपयोगे च चिंतनं करोति तावत् तत्रस्याः अत्याधुनिक – यंत्रादिसाधन – संपन्नाः तंत्रज्ञाः अन्यां विधां विकासयिष्यन्ति। अस्मदाविष्कारकस्य एकस्वाधिकारं च उल्लंघितुं पारयिष्यन्ति। तदा अस्मदाविष्कारकस्य परिश्रमाः व्यर्थाः एव स्युः। पुनरपि आयातितं स्टील अत्रोत्पादितस्य तुलनया गुणवत्तरं च न्यूनमूल्यं स्याच्येत् तदा सर्वकारोऽपि एनं स्वीयं विहाय विदेशीयं आविष्कारं एकस्वं

क्रीत्वा संयत्राणि स्थापितुं प्रयतेत। अस्मदीयः श्री भारती तु हताशः भग्नदेशप्रेमा भवेत्। सः पृच्छति "किं वै उद्योग-तांत्रिकी क्रांतिः सर्वदा विदेशोभ्यः एवागच्छतु?"

एकतस्तु (ईदृशैरेव कारणैः) बहवः प्रतिभाशालिनः विज्ञान–गवेषणा–निपुणाः विदेशेषु गत्वा तद्राष्ट्रीयत्वं गृह्णन्ति। पुनः अत्रस्थैः कृताः आविष्काराः अपि विदेशेष्वेव गच्छेयुः तर्हि महती हानिः प्रसज्येत।

अतः ईदृशानां, आविष्कारसंवर्धनमंडलेन विशेषतया पुरस्कृतानां आर्थिकदृष्टया महत्वपूर्णानां, आविष्काराणां अत्रैव वर्षद्वयाभ्यन्तरे एव उत्पादनं भवेत्, विदेशीयेभ्यो न विक्रीताः भवेयुः रहस्यानि इत्यर्थे सर्वकारेण जागरूकेण भाव्यम्। तथैव उद्योगपतिभिश्च प्रयतितव्यम्। अन्यथा अस्मद्राष्ट्रस्य आर्थिकी स्थितिः नैव सुधारं यास्येत्।

(आधारः–हिन्दुस्तान् टैम्स् (आंग्ल)
२५–८–७१ अंके टन् ऑफ्
स्टील् फॉर ए सांग)



# विश्वसंस्कृतसम्मेळनम्

अन्तर्जातीय संस्कृतसम्मेलनमद्य वर्षे दिशांबरमासे मद्रास् नगरे भविष्यति । बेंगलूर कोलडमठाधीशः शान्तवीरस्वामी एतद् विषये प्रधानामात्यां भारताध्यक्षं एड्वर्ड् केनडीं पश्मिशर्मण्य-राजदूतं यु सांडं च संगम्य तत्तद्देशेष्वपि एवंविध संस्कृतसमावेश-निर्वहणविषये साहाय्यं प्रार्थयत । केनडीयुसांडौ च स्वीयदेशे एतादृशसमावेशस्य दशदिननिर्वहणाय स्वामिवर्याणां साहाय्यदानं प्रत्यज्ञासिष्टाम् । श्री स्वामी आन्ध्रेषु कर्णाटेषु वा संस्कृतविश्व-विद्यालयस्थापनमप्यभिप्रयन्ति । एवं अखिलभारतसंस्कृतप्रचार-संघकार्यदर्शी श्री आर्. के. शर्मा असूचयत् ।

(Hindu, August 21)

# वेदविद्वत्सम्मानसभा

विजयवाटीनगरे विजयदशमीदिने देवीभवने वेदविद्वत्सभा समवर्तत । मार्कि २६० वेदविदः तत्र समाविशन् । श्री लंका वेङ्कटशास्त्री घनपाठी, श्री गंटि सत्यनारायणचयनः, श्री गुळ्ळ पल्लि वेङ्कटनारायणघनपाठी च परीक्षकत्वेन व्यवाहरन् । योग्यता-पत्राणि धनरूपेण पारितोषिकाणि च तत्तद्योग्यतानुगुणं व्यतीर्यन्त ।

एषा च सभा श्री कौतापूर्णानन्द महोदयस्य निधिना पंचाश-द्वत्सरेभ्यः प्रतिविजयदशमि प्रचलतीति प्रमोदस्थानम् ॥

# बिरुदसम्मानः

प्रयागक्षेत्रीय भारतपरिषदा २९–८–७१ दिने जगदाचार्य पीठाधिष्ठातॄणां वैदिकमनोहरादिबहुपत्रप्रकाशकानां विशिष्टाद्वैतसिद्धान्तनिर्धारकाणां कांचीपुरवास्तव्यानां उ. वे. प्र. श्रीमतां तिवादिभयंकराणां अण्णङ्गराचार्यस्वामिनां कृते

## महामहिमोपाध्याय

बिरुदेन सम्मानो निरवर्त्यत ।

उयाध्यायः, महोपाध्यायः, महामहोपाध्यायः इति च बिरुदानि परिचितपूर्वाणि । इदं तु महामहिमोपाध्यायबिरुदं तदधिकं अनन्यार्हं आचार्यवर्येभ्यः प्रदत्तमिति अतीव युज्यते । उभयवेदयोः उभयवेदान्तयोः "वयं वा वयमेव वा" इति प्रवक्तुं ईशाः सकलजटिलग्रन्थग्रन्थिविमोचनधुरीणाः वादधीराः जलदगभीरवाग्धाराः, सन्दिग्धपाठनिर्धारणदक्षसूक्ष्मेक्षाः बहुग्रन्थव्यातारः असंख्याकग्रन्थग्रन्थयितारः, अनल्पग्रन्थप्रकाशकाः, अशीत्यधिकवयस्कानामपि येषां मनसि भ्रमस्संशयो विस्मृतिर्वा लेशतोपि नास्ति, यांञ्चोपश्रुत्य प्रतिवादिघटाः परितो विशीर्यन्ते, ते सत्यं महामहिमशालिन एव भवन्ति । वाङमये एक एव महिम भट्टः श्रूयते, एते चाद्य महामहिमभट्टाः नूनं अतः एतादृशं बिरुदं सर्वथा सार्थकमभूत्तत्संबन्धात् ।

अण्णगंराचार्य सत्कीर्तिर्वर्धतामभिवर्धताम् !

—— :o: ——

## विजयदशमी महोत्सवः

सेलमनगरे श्री श्रृंगेरीशंकराचार्यमठे अखिलभारतसंघ-सेबासमिति, श्री ब्रह्मविद्यासभा, श्री श्रृंगेरि जगद्गुरु पाठशालाभिः विजयदशमी महोत्सवो महावैभवेनायोजितः ।

तत्र च मंडलन्यायाधीशः श्री एस्. स्वामिक्कण्णु B.Sc.,M.L., आध्यक्ष्यमवहत् । अखिलभारतशंकरसेवासमितेः कार्यदर्शी श्री के. वी. सुब्बरत्नम् B. A., B. L, संस्कृताभ्यासावश्यकतां प्रति अभाषत ।

तत्संदर्भे भारतीयविद्याभवन, संस्कृतभाषाप्रचारिणी सभा, अखिलभारतशंकरसेवासमिति परीक्षासु मार्चमासप्रवृत्तासु उत्तीर्णेभ्यः छात्रेभ्यः प्रमाणपत्राणि पारितोषिकाणि च व्यतीर्यन्त ।



## अष्टमः उभयवेदान्तसभासमावेशः

अयं विजयवाटिकापुरे नूतनदेवालये श्रीलक्ष्मीनारायणार्यवैश्य-कल्याणमन्दिरे च प्रावर्तत । २१-९-७१ प्रभृति २५-९-७१ पर्यन्तं पंच दिनानि प्रत्यहं प्रातस्समावेशाः श्रीभाष्यविषयकाः नूतनदेवा-लयस्थ–कोदण्डरामालये, सायंसमावेशाश्च आर्यवैश्यकल्याणमन्दिरे समभवन् । श्री भाष्यभगवद्विषयनिष्णाताः पंडिताः उपपंचाशत् तत्र समाविशत् । श्री भाष्यसमावेशानां न्यायवेदान्तविद्वान् उ. वे. प्र. श्रीमान् मोलुगु रामानुजचार्यः, भगवद्विषयसमावेशानां उ. वे. प्र. श्रीमान् श्रीमच्छीरंगं नल्लान् चक्रवर्ती श्रीनिवासरघु-नाथाचार्यस्वामी च आध्यक्ष्यमवहताम् । प्रत्यहं च विजयनगरवा-

स्तव्यायाः द्राविडवेदान्तनिष्णातायाः श्रीमत्याः करि लक्ष्मीनरसांबायाः आध्यक्ष्येण विदुषीणां वेदान्तोपन्यासाश्च स्त्रीमात्रकृते समचलन् । निडुमुक्कल पारेपल्लि ताडिकोंड जानां रामानुजकूटेषु तदीयाराधनादिसौकर्यं अकल्प्यत विद्वद्भ्यः ।

श्री त्रिदंडि श्रीमन्नारायणरामानुजजीयरस्वामिनामा देशेन श्री विशिष्टाद्वैतप्रचारकसंघनिर्वाहकाणां न्यायवेदान्त पारगानां श्रीमतां ते. कं. गोपालाचार्यस्वामिनां आध्वर्येण च समावेशाः सवैभवं प्राचलन् ।



# ग्रन्थपरिचयः

## सुधालहरी

मूल्यम् रू. २–००
प्राप्तिस्थानम् – S. V. विजयसारथिः
श्रीवेंकटेश्वरसंस्कृतान्ध्रकलाशाला
स्टेशन् रोड्, वरंगल् (आं. प्र.)

एकशिलानगरस्थया संस्कृतविज्ञानपरिषदा प्रकाशिता इयं सुधालहरीनाम्नी वार्षिकसंचिका अतिमनोहरा राराजते । अत्र विमर्शविभागः काव्यविभागश्चेति भागद्वयं वर्तते । विमर्शविभागे च अध्येयं संस्कृतं, उपमा कालिदासस्य, पाठशोधनं, रसगंगाधरसमीक्षा, लावण्यशब्दार्थविचारः, नाऽनृषिः कुरुते काव्यमित्यंशाः,

काव्यविभागे च भक्तभूषणचम्पूः, भारतीसुप्रभातम्, भारतदेश-वर्णनं, गान्धितारावलिः, ग्रामसौभाग्यं, युक्तिशाली वणिक् इत्यंशाश्च निबद्धाः । एतन्निबन्धकाश्च सुगृहीतानामानः श्री न. च. रघुनाथाचार्यः, श्री दोर्बल विश्वनाथशर्मा, श्री चेलंचर्ल रंगाचार्यः, श्री श्रीभाष्यं विजयसारथिः इत्यादयः ।

विषयश्च छात्रोपाध्यायसहृदयरस्यं अतिमुदावहं वर्तते । तत्र च रसगंगाधरसमीक्षा कोटिप्रतिकोटिमाटीकमाना वाचकानां विमर्शनात्मकबुद्धिं वर्धयेत् निष्पाक्षिकसिद्धांतस्थापनसामर्थ्यं च । भारतभारतीत्यादीनि खंडकाव्यानि प्रजाप्रबोधमधुराणि । अन्ते हास्यरूपकं च विनोदयति सहृदयान् । इयं सुधालहरी सत्यं सुधालहर्येवाद्यन्तं सुरभारत्याः शोभनं नवभंगिमभरितं भूषणं च ।



## अमरज्योति

मूल्यम् २-५०
प्राप्तिस्थानम् – श्री गोदाग्रन्थमाला,
मुसुनूरु पोस्ट, कृष्णा जिल्ला. (आं. प्र.)

विद्याविशारदः साहित्यरत्नं, भाषाप्रवीणश्च श्रीमान् के. टि. एल्. नरसिंहाचार्यः आंध्रभाषायां बालोपयोगितया इमां कृतिं अरचयत् । तत्र प्रख्यातयशसः श्री लालबहादुरशास्त्रिणश्चरित्रं ललितमधुरं बाल्यादान्तं आबध्यत । आदर्शपुरुषस्य शास्त्रिणः जीवितान्ततपस्साधना मधुरमधुरभाषया अवर्ण्यत यत्पठनेन न केवलं बालानां अपितु प्रौढानां, न तावन्मात्रमेव नायकानामपि स्वीयनित्यवर्तने दुश्चर्यानिरोधाय सद्यः मनः प्रतिज्ञातुमुद्युञ्जीत । नूनमेतत्पठनेन बालास्सत्यवादिनः शुभशीलाः

निराडंबराः देशभक्ताः दुर्घटकार्यधूर्वहाः त्यागिनश्च भविष्यन्ति । किं बहुना यद्यत् अद्य विद्यार्थिषु आकांक्ष्यते सुगुणजालं सर्वमपि कान्तासम्मिततया तेषु संपादयेदयं ग्रन्थ इति छात्रालयाधिकारिभिरेतत्पठनावकाशः कल्पनीयो विद्यार्थिनाम् । धन्योयं रचयिता यस्सुसमये बालकलोकं शास्त्रिचरितामृतपात्रमुपहारीकृत्य समुद्धरति ॥

— ति. कं. तिरुवेंकटाचार्यः

## ग्रन्थसमर्पणम्

"भारतीनिरुक्ति" (वेदस्वरूपदर्शनम्) नामको ग्रन्थः हरिसोदरैः (शोधन्-पेयिन्टस्, बन्दर् रोड्, विजयवाडा-१) स्वविरचितः कार्वेटीनगरमलंकुर्वतः श्रीमतां तत्रभवतां जगद्गुरूणां श्रीकांची कामकोटिपीठाधीश्वराणां श्रीचन्द्रशेखरेन्द्रसरस्वती महास्वामिसंयमीद्राणां, तदन्तेवासिवर्याणां श्रीजयेन्द्रसरस्वतीस्वामिनां च सन्निधौ सप्रश्रयं सर्मपितः । श्रीकुप्पा आंजनेयशास्त्री, श्री कुप्पा लक्ष्मणावधानि प्रमुखवेदविदुषां समक्षं श्रीचरणैः सादरं, सावधानं च ग्रन्थः श्रुतः ।

अत्र च ग्रन्थे वेद, ऋषि, ब्रह्म, श्रुति, आम्नाय, स्वाध्याय, स्वाहा, स्वधा, वषट्, त्रयी, कवि, काव्य, इडा, सरस्वती, भारती, छन्दः प्रभृतीनां वेदपर्यायवाचकानां मन्त्र, ब्राह्मण, स्मृति, पुराणेतिहासादिप्रदर्शितनिर्वचनाद्यनुरोधेन निरूपितं अपौरुषेयत्वस्वतः प्रामाण्यादिकं वेदस्वरूपस्वभावनिरूपणविधानं, तदनुरोधेन चारि-

त्रककल्पनाप्रख्यानविधानं च श्रुत्वा श्रीचरणाः, विद्वांसश्च अमन्दमानन्दमापुः ।

"नमाम वेदमातर" मिति हरिसोदरैः कृतं वेदमातृस्तवं च सानन्दं शुश्रुवुः । रचयितारश्च हरिसोदराः (हरि वेंकटसुब्बय्य, चल्ला सत्यनारायणशास्त्री, हरिवेंकटकृष्णमूर्ति, हरि सांबशिव शास्त्री, हरि चन्द्रशेखरशर्मा, हरि लक्ष्मीनरसिंहशर्माणः) श्रीचरणैः काश्मीरराङ्ककवशाटीभिः साशीर्वादं सत्कृताः । ★

## समस्यापूरणम्

अज्ञानादथवा प्रमादवशतो मोहादुत प्रीतितो
जाल्माः केचन साहसैकधिषणाः सद्भ्योऽपराध्यन्ति हि ।
तं मन्तुं सकलं विवेकनिधयस्सन्तस्सहन्तेतराम्
बालानां गणयन्ति किन्नु महितात्मनोऽपराधं क्वचित् ?

– श्री आ. पार्थसारथिभट्टाचार्यः, तिरुपति.

## विश्वसंस्कृतसम्मेळनम्
## भारतीयसंस्कृतिसम्मेळनं च

१७-१-७२ प्रभृति २५-१-७२ पर्यन्तं देहलीमहानगरे भारतसर्वकारीय विद्यामन्त्रांगस्य युनेस्कोसहकारीयभारतजातीयसमितेश्चोभयोः आध्वर्येण विश्वसंस्कृतसम्मेलनं प्रचलिष्यति ।

तेष्वेव दिवसेषु अखिलभारतसंस्कृतप्रचारकं एवं शिक्षासमितिरित्येतया च दिल्यां भारतीयसंस्कृतिसम्मेलनं चायोक्ष्यत इति महान् शुभसंदर्भोयम् ।

प्रपंचे खण्डखण्डांतरेभ्यः पण्डितप्रकाण्डाः दिल्लीमलंकृत्य स्वदर्शनप्रसंगादिभिरानन्दयिष्यन्ति सहृदयान् ।

प्रथमतः सभ्यतास्वीकरणे धूमशकटद्वारा यातायातव्यये न्यूनता ग्रासनिवाससौविध्यं च लभ्येत । सभ्यताशुल्कं च १५ रूप्यात्मकम् ए रूपेण (A form) साकं प्रेषणीयम् । फारग्रहणादि-सर्वकार्येभ्यः अधः स्थितेन संकेतेन व्यवहर्तव्यम् ।

The office on the Special Duty (Sanskrit) Ministry of Education and Social Welfare, Sastry Bhavan, Dr. Rajendraprasad Road, New-Delhi. इति ।

★

## ब्राह्मणेषु लक्ष्म्याः कोपकारणम्



तातोऽगस्त्येन पीतः, चरणतलहतो वल्लभोऽन्येन रोषाद्
गेहं मे छेदयन्ति प्रतिदिवसमुमानाथपूजानिमित्तम् ।
आबाल्याद्विप्रवर्गैर्वदनसरसिजे धार्यते वैरिणी मे
तस्मात्खिन्ना सदाऽहं द्विजवरनिलयं नाथ! नूनं त्यजामि ॥

★

## जिह्वाप्रार्थनम्



जिह्वे! ते द्विगुणाऽधिकारपदवी संयोजिता ब्रह्मणा
यज्जानासि रुचिं तथैव मधुरं सञ्जल्पितुं कल्पसे ।
तस्मात्तादृगदृष्टयोगकलनासाफल्यसंसिद्धये
स्वादु स्वादु निरन्तरं भगवतो नाम त्वयोच्चार्यताम् ॥

—श्री मद्दुलपल्लि वेंकटसुब्रह्मण्यशास्त्री.

# सुभाषितानि

ले० श्री यन्. रामनाथार्यः

(पूर्वानुबन्धः)

यावत्स्वस्थो ह्ययं देहः यावन्मृत्युश्च दूरतः ।
तावदात्महितं कुर्यात् प्राणांते किं करिष्यति ॥ ४०९ ॥

As long as the body is in a healthy condition, and Death is awaiting at a distance, one should indulge in activities beneficial to one's soul. What can anything be done at the approach of death?

उष्ट्राणां च विवाहेषु गीतं गायन्ति गर्दभाः ।
परस्परं प्रशंसन्ति अहो रूपं अहो ध्वनिः ॥ ॥ ४१० ॥

In the marriages of the camels, the musicians are the donkeys. Each one of them extols the other. Oh! what a wonderful shape and what a wonderful music.

वस्त्रेण वपुषा वाचा विद्यया विनयेन च ।
वकारैः पंचभिर्हीनो वासवोपि न पूज्यते ॥ ॥ ४११ ॥

One who is not possessed of the qualities five in number beginning with the letter व namely, decent dress, comely form, decent speech, erudition and modesty, is not esteemed by any one even though he is Lord Indra himself.

प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः ।
कर्मान्ते दासभृत्याश्च न कदाचन पुत्रकाः ॥ ॥ ४१२ ॥

One's elders and preceptors may be praised in their presence; friends and relations in their absence; dependants and servants at the end of their service but not young boys at any time.

उपकर्तुं यथा स्वल्पः समर्थो न तथा महान् ।
प्रायः कूपः तृषां हन्ति सततं न तु वारिधिः ॥ ४१३ ॥

At times great men are not as helpful to others as ordinary men. The sea does not quench one's thirst as does the waters of the well.

छिन्नोपि रोहति तरुः क्षोणोप्युपचीयते पुनश्चन्दः ।
इति विमृशन्तस्सन्तः सन्तप्यन्ते न ते विपदा ॥ ४१४ ॥

A tree sprouts even though it is cut; though waning, the moon again increases in size; taking lessons from this, great men, do not get distressed over mishaps.

आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म ।
स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ ॥ ४१५ ॥

Even though one is not affluent one should be considered really rich if he is possed of health, erudition, association with great men, being born in a great family, and not depending on others.

(अनुवर्तते)

# विद्वत्सु विज्ञाप्यते

संस्कृतभाषाप्रचारिण्यास्सभायाः रजतोत्सवसन्नाहः प्रचलति। उत्सवविशेषांकश्च समुद्रितप्रायः। तत्परिपूर्तिमधिगत्य उत्सवदिनादिनिर्णयः क्रियेत। मन्ये प्रायशः द्वित्रमासे स महोत्सवः निर्वर्त्येतेति।

तत्संदर्भे नवनवरचितानां प्रकाशितानां वा संस्कृतग्रन्थानां प्रदर्शनीमपि निर्वोढुं व्यवस्यति सभा। अतः कृपया संस्कृते नवप्रकाशिताः, अप्रकाशिताः करलिपिरूपेण वर्तमाना वा ग्रन्थाः पत्रपत्रिकाश्च (नागरी-तेलुगु-ग्रन्थ कर्णाटकादि लिपिषु यासु कासुचिदपि वर्तन्ताम्) प्रेषयित्वा प्रदर्शिनीं सविशेषं विभूषयन्त्विति प्रार्थये।

अपि च संस्कृतप्रचारसामग्री तत्तत्संस्थाभिरुपयोज्यमाना सापि प्रेषणीया।

यद्यपि महती ग्रन्थराशिः नवनिर्मिता वर्तते भारते, तथापि तत्तद्रचयितृसंकेताद्यपरिज्ञानात् प्रत्येकं प्रार्थने अशक्ता वयं एतद्विज्ञापनद्वारा अभ्यर्थयामहे यथाशक्ति सहयोगदानाय।

ये केचिच्च महानुभावा ग्रन्थान् प्रेषितवन्तः तेषां विषये कृतज्ञता आविष्क्रियते।

प्रार्थयिता,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
*R. N. 1845/60.* *Postal R. No. H. 493*

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

—:o:—

## प्रहेलिके

विनायकपतिं नत्वा स्तुवन्ति च कुनायकम् ।
कुनाभो नरकं श्रुत्वा जघान च कुमारकम् ।।

अर्थः – वीनां पक्षिणां नायकः गरुडः, तस्य पतिं विष्णुं, नत्वा, कोः पृथिव्याः, नायकं प्रभुं, स्तुवन्ति, कं पद्मं नाभौ यस्य सः पद्मनाभः कृष्णः, नरकं तन्नामकमसुरं, कुमारकं पृथिवीपीडकं, श्रुत्वा नारदादिमुखेन जघान च तमवधीत् ।

– ति. गो. अनन्तसुब्रह्मण्यम्

रामाऽहं पतिपञ्चका परगतिः द्वाभ्यां सदालिंगिता
चित्रं मे रसना च कंठकुहरे पूर्णोदरा साक्षरा ।
द्वेषस्सज्जनता ममैव ववने नीलादिवर्णांकिते
भो विद्वन्! वद मां पुनस्सकवचां या त्वं सदा सेवसे ।।

– मुद्रालेखिनी

अर्थः – सा च पंचांगुलिप्रचोद्या करद्वयसहकारवती साक्षरशलाकापूरिता वर्तते । तस्याः निर्माल्यभूते मषीपत्रे परिहरन्ति तदा तदा मुद्रकाः, कार्यान्ते च तां कवचेन आवृण्वते च ।

– बि. बालगणपतिभट्टः

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S, B, P, Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500